शूलपाणिकृता

# चतुरङ्गदीपिका

—:०:—

ॐ नमो गणेशाय ।

नत्वा हरिपदाम्भोजं भ्रमद्भ्रमरगुञ्जितम्[1] ।
दीपिका चतुरङ्गस्य क्रियते शूलपाणिना ॥ १ ॥

तद्यथा—जनमेजयसूतपक्षिनारदयुधिष्ठिरव्याससंवादे[2] चतुरङ्गक्रीडा भुवि प्रचार्यते । जनमेजयः[3] सूतमपृच्छत् ।* सूतेनापि व्यासाद् यद् वृत्तं[3a] श्रुतं तत्तस्मै कथितम् । तद्यथा—पुरा[4] कश्चिन्मुनिपुत्रः शापात् पक्षी [5]जातस्तेन पक्षिणा इन्द्राय कथितं क्रीडन्तमिन्द्रं दृष्ट्वा नारदः[6] युधिष्ठिराय कथयामास युधिष्ठिरश्च व्यासमपृच्छत् । व्यासेन यदुक्तं तत् शृणु—

जनमेजय[7] उवाच—

कर्मणा केन [8]भगवन् श्रियं प्राप्तो युधिष्ठिरः ।
विस्तरेण च तत् कर्म कथ्यतां मे तपोधन ॥ २ ॥

सूत उवाच—

स्वर्गे सभायां राजेन्द्र महेन्द्रस्य [9]पुरैकदा ।
कश्चित् पक्षी[10] समायातस्तेनागादि सुरेश्वरः ॥ ३ ॥

---

1. ms. -तं. 2. ms. -सम्बादे. 3. -जय. 3a. ms. -सान्तं. 4. ms. पूरा. 5. ms. यात०. 6. ms. नारद. 7. ms. जन्मेजय. 8. ms. भगवन्. 9. ms. पूरै-!. 10. ms. पक्षीः.

इन्द्र त्वं देवशार्दूल[1] कुरु क्रीडां महामते।
मदुक्तां शृणु राजेन्द्र सर्वकामफलप्रदाम् ॥ ४ ॥
अतियत्नेन राजेन्द्र नारदेन सुरर्षिणा।
श्रुतं तन्नरशार्दूल[1] तेनागादि युधिष्ठिरः ॥ ५ ॥
[2]तच् श्रुत्वा नृपतिश्रेष्ठो[3] हृष्टः सपदि खेलने।
आह्वानं कृतवांस्तत्र[4] व्यासादीनां तपस्विनाम् ॥
मुनीनां कुञ्जरं व्यासं कथयामास पार्थिवः ॥ ६ ॥

युधिष्ठिर उवाच—

[5]अष्टकोष्ठ्यान्तु या क्रीडा[6] तां मे ब्रूहि तपोधन।
[7]प्रकर्षेणैव मे(?)नाथ [8]चतूराजी यथा भवेत् ॥ ७ ॥

व्यास उवाच—

अष्टौ कोष्ठान् समालिख्य प्रदक्षिणक्रमेण तु।
अरुणं पूर्वतः कृत्वा दक्षिणे हरितं बलम् ॥ ८ ॥
पार्थ पश्चिमतः पीतमुत्तरे श्यामलं बलम्
राज्ञो वा[*1b*]मे गजं कुर्यात् तस्मादश्वं ततस्तरिम्।
कुर्यात् कौन्तेय पुरतो युद्धे पत्तिचतुष्टयम्[9] ॥ ९ ॥

यमस्तु—

कोणे नौका द्वितीयेऽश्वस्तृतीये च गजो वसेत्।
तुरीये च वसेद्राजा [10]पुरतो वटिकाः स्थिताः ॥ १० ॥

इति वचनक्रमेण बलानि पातयेत्।

---

1. ms. -शार्द्दूल. 2. ms. तत्. 3. ms. -श्रेष्ठः. 4. ms. -वान्तत्र. 5. अष्टकोष्ठान्तु. 6. Ś यां क्रीडां. 7. ms. प्रकर्षंनेव. 8. Ś चतुराजी. 9. ms. adds इति व्यासः. 10. Ś वटिकाः पुरतः स्थिताः.

पञ्चकेन वटी राजा चतुष्केणैव कुञ्जरः ।
तृतीये च[1] चलत्यश्वः पार्थ नौका द्वयेन तु ॥ ११ ॥

इति क्रमेण बलानि पातयेत् । [2]त्रिकेणेति [ च ] पाठः ।*

चतुरङ्गपद्धतावपि—

वटिका पञ्चके राजन् राजाऽप्येवं हि गच्छति ।
[3]तुर्ये गजस्तृतीये [च][4] चलत्यश्वो द्वये तरिः ॥ १२ ॥

इति[4a] ।

कोष्ठमेकं विलङ्घ्याथ सर्वतो याति भूपतिः ।
अग्र एव वटी याति बलं हन्त्यग्रकोणगम् ॥ १३ ॥
यथेष्टं कुञ्जरो याति चतुर्दिक्षु महीपते ।
[5][तिर्यक् तुरङ्गमो याति लङ्घयित्वा त्रिकोष्ठकम् ।]
कोणकोष्ठद्वयं लङ्घ्य व्रजेन्नौका युधिष्ठिर ॥ १४ ॥

दिव्यमालिकायां—

सिंहासनं चतूराजी नृपाकृष्टन्तु षट्पदम् ।
काककाष्ठं बृहन्नौका नौकाकृष्टप्रकारकम् ॥ १५ ॥

इति व्यासः । सिंहासनं प्रवेशः, नृपाकृष्टं वकडावकडी, षट्पदं[6] पत्तिप्रवेशः, नौकाकृष्टं नकडी ।

यमः—

घाताघाते वटीनौका बलं हन्ति युधिष्ठिर[7] ।
राजा गजो हयश्चापि त्यक्त्वा घातं निहन्ति वै[8] ॥ १६ ॥

---

1. Ś त्रिकेण तु. 2. ms. चतुरङ्गपद्धतावपि त्रिकोणेति पाठः. 3. ms. तूर्ये. 4. ms. *avagraha* only for च. 4a. ms. adds च. 5. ms. omits this hemistich ; it has been taken from Ś. 6. ms. -पदम् । पत्तिप्रवेशः. 7. ms. -ष्ठिरः. 8. Ś च.

यत एते महाबलाः

अत्यन्तं स्वबलं रक्षेत् [1]स्वराजबलमुत्तमम् ।

स्वल्पस्या[2a]रक्षया राजन् हन्तव्यं बलमुत्तमम् ॥ १७ ॥

बलं हन्तव्यमित्यर्थः । केषाञ्चिन्मते 'अत्यन्तं स्वबलं रक्षेत् स्वराजबलमुत्तमम्' एतेनातिममत्वं दर्शितम्[2] ।* 'स्वराज-[बलं'] स्वकीयराजबलमिवात्यन्तं महद्यत्नेन [रक्षेत् ।] उत्तमे चेत्[3] यथात्मबले ममता स्वपक्षीयायां सेनायामपि तथा कल्पेत[4] इति भावः । मित्रस्यापि किञ्चिदभिमतस्यापि ।

नौकायाश्चत्वारि पदान्यश्वस्याष्टौ पदानि च ।

मतङ्गजस्य गर्भेण राजा क्रीडति निर्भयम्[5] ।

तस्मात् सर्वबलं दत्त्वा रक्ष कौन्तेय कुञ्जरम् ॥ १८ ॥

पितामहस्तु—

तस्माद् यत्नेन कौन्तेय कुञ्जरं रक्ष सर्वतः ॥ १९ ॥

[6]चतुरङ्गपद्धतौ तु—

तस्मात् सर्वप्रयत्नेन रक्ष कौन्तेय कुञ्जरम् ॥ २० ॥

तस्मात् नैव सर्वबलं दत्त्वा कुञ्जरो न रक्षणीयः ।

मालिकायां व्यासः—

न कुर्यादेकदा राजन् गजस्याभिमुखं गजम् ।

यदि कुर्वीत धर्मज्ञः पापग्रस्तो भविष्यति ॥ २१ ॥

इति वचनाद् गजसम्मुखे गजं नैव पातयेत् ।

---

1. Ś. स्वराजा०. ms. स्वराजबलमुत्तमः. 2. ms. -तं. 3. ms. उत्तमश्चेत्. 4. ms. कल्पते. 5. ms. निर्भरम्. 6. ms. चतुरङ्गपद्धतौ तु नैव तस्मात् सर्वबलं दत्त्वा कुञ्जर न रक्षणीयः । तस्मात् सर्वप्रयत्नेन न रक्ष कौन्तेय कुञ्जरं for चतुरङ्गपद्धतौ……रक्षणीयः.

यमस्तु—

गजस्य संमुखे राजन् गजं नैव प्रपातयेत् ।
प्रमादात् क्रियते येन विप्रहत्यां[1] करोति सः ॥ २२ ॥

प्रमादात् स्थानाभावे[ऽपि] गजं न चालयेत्। मैथिलास्तु 'मृतेऽपि धेढि न दीयते' इति जानन्तोऽपि गजयोर्मध्यबलं चालयन्ति ।* तत्तेषामज्ञानाजीर्णोद्गारवमनम् ।

अतो व्यासस्तु—

अतिप्रमादाद्राजेन्द्र गजयोर्मध्यगं[2] बलम् ।
चालयेन्न च पुण्यार्थी [3]तद्दानं नैव खेलयेत् ॥ २३ ॥

इति वचनाद् यदि गजयोर्मध्ये बलं तिष्ठति तदा पतिते दानेऽपि तद्बलं नैव खेलयेत् ।

पतिते वाजिनो दाने नो चेत् कोष्ठन्तु विद्यते ।
चालयि[*2b*]त्वा च वटिकां राज्ञः क्रोडेऽस्य [4]संस्थितिः ॥२४॥

इति गौतमवचनात् पश्चात्रि[5] पतितेऽश्वस्य स्थानाभावे राजसम्मुखवटिकां चालयित्वा तत्रैवाश्वस्य स्थानम्, न तु कोणवटिकाम्, एषा तु [अ]श्वकोष्ठस्थिताऽश्वोऽपरः[6] । मैथिलास्तु 'दायोरावश्यकत्वम्' ।* एतत्तु एतद्विषये, परं सर्वत्र बोद्धव्यम् ।

[7]बलद्वये चैककोष्ठे ज्येष्ठत्वाच्चालयेद्बुधः ।
पश्चात्रि[8] पञ्च ज्येष्ठं स्यादेवं सर्वत्र युज्यते ॥ २५ ॥

इति गौतमः ।

---

1. ms. -हत्या. 2. ms. -मध्यमं. 3. ms. तद्धानं. 4. ms. संस्थितिरिति. 5. ms. पञ्चः त्रि. 6. ms. एतत्तु स्वकोष्ठस्थित्वाश्वपरं. 7. ms. द्वौ बलस्यैककोष्ठस्य. 8. पञ्च त्रि.

व्यासस्तु—

पञ्चत्रि[1] पतिते दाने कोष्ठमेकं पुनर्द्वयोः ।
ज्येष्ठत्वाच्चालये[त्] पञ्च पार्थैतत् कथितं ध्रुवम् ॥ २६ ॥

इति वचनात् पञ्चत्रि पतिते दाने ज्येष्ठत्वात् पञ्च एव चालयेत् न तु त्रिः । एवं सर्वत्र ज्ञेयम् । चतुरङ्गपद्धतावप्येवम् ।

द्वैविधं हि बलं प्राप्तं स्वल्पं वा यदि वा बहु ।
हन्तव्यं गौरवं यत्र इति पार्थ मयेरितम्[2] ॥ २७ ॥
हस्त्यश्वपत्तिनौकायाम्[3] एवं सर्वत्र युज्यते ।
राजकुञ्जरयोः पार्थ स्वेच्छया नृपरक्षणम् ॥ २८ ॥

इति वचनात् यदा द्वैविधं बलं प्राप्नोति तदा [4]यत्र गौरवं तद्धन्तव्यम् ।* हस्त्यश्वयोर्मध्ये हस्त्येव गरीयान्, पत्तिनौकयोर्मध्ये नौकैव गरीयसी, किन्तु राजकुञ्जरयोर्मध्ये कर्तुर्या इच्छा। 'गौरवं यत्र [इति] पार्थ मयेरितम्'[4] अत्र यतिभङ्गाद[4a]-सन्धिः ।* सन्धिस्तु [5]कर्तुरिच्छया [·········] ।* वस्तुतस्तु गज एव हन्तव्यः[5a], यतो बलानां श्रेष्ठत्वात् ।

ज्येष्ठो बलानां राजेन्द्र गज एव प्रकीर्त्तितः ।
इतरेषाञ्च सर्वेषामेकतस्तु युधिष्ठिर ॥ २९ ॥

ज्ञातव्य इति शेषः । 'एकत' एकम् एकं कृत्वा ।* पत्तिनौकयोर्नौकैव[6] ।

मालिकायाम्—

[7]घातयेद्विन्धयेत् पार्थ सर्वत्रैव हि बुद्धि[*3a*]मान् ।
बिन्धने शृणु कौन्तेय व्यवस्थां ददतो मम ॥ ३० ॥

---

1. ms. पञ्चत्रिः. 2. ms. मयेरितं. 3. ms. -यां. 4. ms. तत्र. 4a. -भङ्गत्वाद-. 5. ms. मनुच्छया. 5a. ms. adds यतो. 6. नौकेव. 7. ms. -द्विसन्धयेत्.

बिन्धयेद् यत्र तत्रैव बलं दृष्ट्वा हि चोत्तमम्।
बिन्धने सति राजेन्द्र मित्रस्य चाऽऽत्मनोऽपि वा ॥ ३१ ॥
शक्यते बिन्धनं छेत्तुं [विपत्त्यान्न][1] तु बिन्धयेत्।
तदभावे नृपश्रेष्ठ सुतरां[2] बिन्धयेत् सुधीः।
जानतो बिन्धनं नास्ति त्विति व्याससमीरितम् ॥ ३२ ॥

इति व्यासवचनात् [यदा] मित्रस्य आत्मनो बलस्य बिन्धने सति तद्बलेन बिन्धनं छेत्तुं शक्यते तदा बिन्धनं छेद्यं न तु [3]विपत्त्यान् बिन्धयेत्।* किन्तु तदभावे चेद् बिन्धनं छेत्तुं न शक्यते तदा बिन्धयेत्।* किन्तु चेत् स्वल्पमपि घातितुं शक्यते तदा न बिन्धयेत्।

अत्र प्रतिप्रसवमाह भृगुः—

खादयेद् यस्य कौन्तेय न दोषस्तस्य बिन्धने।
न च कार्यं तस्य मैत्रे भृगुणा कथितं मतम् ॥ ३३ ॥

इति वचनाद् यस्य बलं खादितुं न शक्यते तन्न खाद्यम्[4]। तस्य बलं [5]बेन्धुं शक्यते। अत्र निर्दोषः। [6][मि]त्रबलं बेन्धुं न शक्यते।

बलस्य घातने पार्थ बिन्धनं चेत् समुत्थितम्।
मित्रस्य इति विख्यातो बलाघातस्तु पाण्डव[7] ॥ ३४ ॥

इति वाक्यात् शत्रोर्बलघातने चेन्[8]मित्रस्य बिन्धनं [9]जातं तदा बलाघातः कथ्यते।

---

1. ms. omits विपत्त्यान्न, see note 3. 2. ms. सूतवा. 3. This suggests विपत्त्यान्न in śl. 32. 4. ms. खाद्यं. 5. ms. बेन्धु. 6. [×] त्र ब [×] बेन्धु न शक्यते. 7. ms. पाण्डवः. 8. ms. चेत्. 9. ms. घातं.

महाबलांश्च राजेन्द्र सङ्कटस्थान्न कारयेत् ।
सङ्कटे पतिते राजन् ब्रह्महत्यामवाप्स्यति ।
कारयेद् यदि साङ्कट्यं सद्बलं घातयेत्तदा ॥ ३५ ॥

इति व्यासवचनात् महाबलान् सङ्कटस्थान्न कारयेत् । महाबला राजगजाश्वाः । तद्यथा मित्रेण [1]बेन्धोर्विपत्तस्य राजा एवं कोणस्थाया वटिकाया अग्रे [2]चालितोऽश्वस्तिष्ठति चेत् [*3b*]तदात्मनश्चतुः[3]पश्चे सति [दाने] अश्वो नैव हन्तव्यः ।* मैथिलास्तु 'कारयेद् यदि[4] साङ्कट्यं सद्बलं घातयेत्तदा' इति वचनाद्[5] घातयन्ति ।* [6]तच्चचतुरङ्गपद्धतिकारस्य स्वलनमिति गुरुचरणाः ।* वचनस्य [6a]प्रामाण्याभावात् । तन्न तेषां यद्रोच्यते तत् कार्यम् ।

द्वौ बलौ मित्रशत्रोर्हि संप्राप्तौ पार्थ चैकदा ।
हन्तव्यौ द्वौ बलौ राजंस्त्यक्त्वा च वटिकान्तरम् ।
द्वौ बलौ वटिकान्यूनौ द्वौ बलौ बलवत्तरौ ॥ ३६ ॥

इति यमवचनात् तेनावश्यं द्वौ बलौ हन्तव्यौ । एतत्तु सर्वत्रैव[7] योजयेत् ।

[8]राजा गजस्तथैवाश्वो घातं त्यक्त्वा निहन्ति च ।
स्थानाभावेऽपि राजेन्द्र घातेऽपि प्राप्यते बलम् ।
यमेन कथितश्चैतद्धन्तव्यं तद्बलं ततः ॥ ३७ ॥

---

1. बन्धो॰. 2. ms. चालिताश्वस्ति॰. 3. ms. चतु. 4. ms. reads वा after this, but it spoils the metre of the quoted verse. 5. ms. वचनात्. 6. ms. तत्. 6a. ms. प्रमाणाभावात्. 7. ms. सर्वत्रेव. 8. This line is repeated in the ms.

इति यमवचनात् घातेऽपीति स्थानाभावे बलं चेत् प्राप्यते तद्बलं हन्तव्यम्। [1]मैथिलैश्च [एतत्] खार[2]ष्कुमावश्च कथ्यते। एतत्तु ग्राम्यभाषा। चतुरङ्गपद्धतावप्येवम्।

बलस्य चालने राजन् क्रममाहुर्मनीषिणः[3]।
दर्शयित्वा त्रयं स्थानं तत्र धीमान् बलं नयेत् ॥ ३८ ॥

एवं बलहनने—

बलानां हनने राजन् बलं तूर्णं न तोलयेत्।
दर्शयित्वा बहून् दोषान् बलं तस्माद्धठान्नयेत् ॥ ३९ ॥
प्रमादाद् यदि कौन्तेय भ्रमं स्याद्बलघातने।
[ *3a*प्राप्नोति च ] बहून् दोषान् पापग्रस्तो भविष्यति ॥४०॥

इति वचनात् मित्रस्य [4]बिन्धनं चेद्वर्त्तते तदा बलं नैव हन्तव्यम्। अज्ञातमित्रेण मित्रस्य बलं हन्तुं न शक्यते। [5]एतत्तूभयत्र ज्ञेयम्।* हत्यादिदोषान् दत्त्वा बलं तत्रैव स्थापयेत्। दोषत्रयं दत्त्वा...... [*4a*] तद्यथा घातत्रये पतति। एवं द्वौ बलौ प्राप्ते अथवा तस्य बलानां बिन्धने सति बिन्धनं छेत्तुं चेत् शक्यते तदा बिन्धनं छेद्यम्[6]।* एवं सर्वत्र[7]। यदि प्रमादात् क्रोधाद् भ्रमं स्याद् दोषे सति दोषान् दर्शयितुं न शक्यते तदा पापग्रस्तो भविष्यति। चतुरङ्गपद्धतावप्येवम्।

महाबलाश्च बिद्धाश्चेद् विपक्षे बहुलाभता।
छेदयेद्बिन्धनं राजन् विपक्षं नैव घातयेत् ॥ ४१ ॥

---

1. ms. मैथिलाश्च. 2. ms. खारः. 3. ms. मनीषिनः. 3a. ms. भवेत्तस्य. 4. ms. बन्धने. 5. ms. एतत्तुभयत्र। ज्ञेयं इत्यादि. 6. ms. छेद्यं. 7. ms. सर्वत्रं.

इति वचनान् महाबला [1]विद्धाश्चेत् विपक्षस्य बलं प्राप्नोति तदा बिन्धनं छेद्यं न तु विपक्षघातनम्[2]।

अन्यद्राजपदं राजा यदा यातो[3] युधिष्ठिर।
तदा सिंहासनं तस्य [4]भण्यते नृपसत्तम ॥ ४२ ॥

राजा च नृपतिं हत्वा कुर्यात् सिंहासनं यदा।
द्विगुणं वाहयेत् [5]पण्यमन्यथैकगुणं भवेत्[6] ॥ ४३ ॥

द्विगुणत्वे षट्त्रिंशत्पणमित्यर्थः। मैथिलास्तु द्विगुणत्वे द्विसप्ततिः। तत्तेषां स्खलनम्। मित्रराजपदमेव बोद्धव्यम्[7]।

यमस्तु—

मित्रसिंहासनं पार्थ यदारोहति भूपतिः।
तदा सिंहासनं नाम सर्वं नयति तद्बलम् ॥ ४४ ॥

इति वचनादपि षट्त्रिंशद्[8] जयः।

यदा सिंहासनं कर्त्तुं राजा षष्ठपदान्वितः[9]।
तदा घातेऽपि हन्तव्यो बलेनापि सुरक्षितः ॥ ४५ ॥

इति व्यासवचनाद्राजा बलेन सुरक्षितोऽपि यस्मिन् काले ससैन्यः सन् प्रवेशं कर्त्तुमुद्यतस्तदा घातेऽपि हन्तव्यः।

विद्यमाने नृपे [10]यस्य स्वकीये च नृपत्रयम्[11]।
प्राप्नोति च [12]यदा तस्य चतूराजी [13]तदा भवेत् ॥ ४६ ॥

---

1. ms. विन्धा-. 2. ms. घातनं. 3. Ś क्रान्तो. 4. ms. प्रवेशमित्यर्थः for भण्यते नृपसत्तम which is in Ś. 5. ms. पुण्य०. 6. Ś adds द्विगुणं पण्यं दातव्यत्वेन प्रापयेत्. 7. ms. -व्यं. 8. ms. त्रिशत्. 9. Ś ०श्रियः. 10. Ś यत्र. 11. ms.-त्रयं. 12. Ś तदा. 13. Ś यदा.

इति व्यासवचनात् स्वकीये नृपे सति [चेत्] राजत्रयं प्राप्नोति तदा तस्य चतूराजी भवेत् ।

नृपेणैव नृपं हत्वा चतूराजी यदा भवेत् ।
द्विगुणं वाहयेत् पण्यमन्यथैकगुणं भवेत् ॥ ४७ ॥

[4b]अत्रापि द्विगुणत्वे षट्त्रिंशद् जयः[1] ।

स्वपदस्थं यदा राजा राजानं हन्ति पार्थिव ।
चतुरङ्गे तदा भूप वाहयेच्च चतुर्गुणम् ॥ ४८ ॥

अत्रेदं बीजम्[2] उभयथा जयेऽपि परसिंहासनाधिकारात् परराजवधे शौर्याधिक्यं निष्कण्टकत्वदर्शनात्, क्रीडायामपि तथा कल्पेत[3] । अत्र चतुर्गुणत्वे द्विसप्ततिर्जयः[4] । मैथिला अप्येवं वदन्ति ।

गौतमः—

यदा सिंहासने काले चतूराजी समुत्थिता ।
[5]चतूराजी भवत्येव न तु सिंहासनं नृप ॥ ४९ ॥

एतत्तु सर्वत्रैव बोद्धव्यम् ।

प्रवेशे यदि तस्यैव [5]चतूराजी भवेत् पुनः ।
चतूराजी च कृत्वा वै द्विगुणं पण्यमाप्नुयात् ॥ ५० ॥

इति वचनात् प्रवेशकाले यदि तस्य चतूराजी भवेत्तदा चतूराजी एव न तु प्रवेशः । पण्यं दातव्यत्वेन प्रापयेत् । [6]चतुरङ्गपद्धतावप्येवम् ।

राजद्वयं यदा हस्ते आत्मनो राज्ञि संस्थिते ।
परेण संहृतश्चैको बलेनाप्यपहार्यते ॥ ५१ ॥

---

1. ms. ०शतुजयं. 2. ms. बीजं. 3. ms. कल्प्यते. 4. ms. -जयं. 5. ms. चतु-. 6. ms. चतुरङ्गे तावप्येवं.

इति वचनात् राजद्वये सति आत्मनो राज्ञि संस्थिते च परेण चेदेको नीतस्तदा बलेनापहार्यः ।* वस्तुतस्तु नैवं वकडावकडीति नेतुं न शक्यते ।

तद्यथा व्यासः—

उत्थिते च बले राजन्नेवं कुर्याद्विचक्षणः ।
राजत्रये स्थिते [1]हस्ते अन्यो नीतश्च शत्रुणा ।
वकडावकडीत्युक्ते राजानमानयेद्धठात्[2] ॥ ५२ ॥

इति वचनात् राजत्रये[3] हस्तस्थे सति स्वराजो मित्रराजो वा शत्रुणा नीतस्तदा वकडावकडीत्युक्ते तात्कालिकमेव हस्तान्नयेत् ।* नृपाकृष्टमेतत्[4] ।

[5][ राजद्वयं यदा हस्ते न स्यादन्यकरे परः ।
तदा राजा हि राजानं घातेऽपि तं हनिष्यति ] ॥ ५३ ॥

व्यासः—

नृपाकृष्टं यदा राजा गमिष्यति युधिष्ठिर ।
तदा घातेऽपि हन्तव्यो यदि[6] तत्र न रक्षकः ॥५४॥

इति [*5a*] वचनात् राजा यदि नृपाकृष्टं कर्त्तुं गच्छति[7] तदा घाते हन्तव्यः, नृपाकृष्टभङ्गत्वात् ।

मनुः—

[8]बलेनैकेन राजेन्द्र हस्तिनस्तुरगस्य[9] वा ।
राजेन्द्र बिन्धनं छेत्तुं वकडा चेत् समुत्थिता ॥ ५५ ॥

---

1. ms. हस्तेऽन्यश्नीतश्च. 2. ms. -हठाद्. 3. ms. -त्रय. 3a. ms. स्वराजा मित्रराजा. 4. ms. -मेतं. 5. This couplet is from Ś. 6. ms. राजा for यदि. 7. ms. गछति. 8. ms. बलौकेन तु. 9. ms. -रङ्गस्य.

[1]कारयेद् वकडां पार्थ बिन्धनं नैव छेदयेत् ।
राज्ञस्तु बिन्धने पार्थ नृपाकृष्टं न कारयेत् ॥ ५६ ॥

इति वचनात् चेत् गजस्याश्वस्य वा बिन्धने सति वकडा समुत्थिता । अत्र [ एक- ] काले एकबलेन द्वयं [ चेत् ] प्राप्यते बिन्धनं छेदनं कर्त्तुं शक्यते एवं वकडां कर्त्तुं शक्यते तदा वकडा कार्या न तु बिन्धनच्छेदनम् ।* किन्तु राज्ञो बिन्धने बिन्धनं छेद्यम्[2] अन्यथा राज्ञि हते नृपाकृष्टभङ्गः अधर्मलाभः केवलम् । अत एव व्यासः—

उठाकाले तु राजेन्द्र वकडा चेत् समुत्थिता ॥ ५७ ॥

मालिकायां निषेधः—

राजद्वये स्थिते हस्ते मित्रेण हन्यते यदा ।
स्वराजः[3] खल्विति प्राह मीनमारश्च पाण्डव[4] ।
वकडावकडीत्युक्ते चात्र नेतुं न शक्यते ॥ ५८ ॥

'खलु' निश्चितं राजद्वये[5] हस्ते सति स्वराजः[6] प्रवेशभङ्गार्थं मित्रेण घातयित्वा यदि तस्मै दीयते तदा पुनरस्य राजानं नेतुं न शक्यते ।* मीनमारत्वादिति बोद्धव्यम्[7] । मीनमार-शब्दो ग्राम्यभाषायामदन्तः[8] । चतुरङ्गपद्धतावप्येवम् ।

कोणं [9]राजपदं त्यक्त्वा वटिकान्तं यदा व्रजेत् ।
[10]वटी षष्ठपदं नाम तदा कोष्ठबलं नयेत् ॥ ५९ ॥

षट्पदाख्यमेतत् । कोष्ठबलं कोष्ठस्थितबलम् ।

---

1. ms. कारयेद्व कडां. 2. ms. छेद्यं. 3. ms. स्वराजा. 4. ms. माण्डव. 5. ms. ०द्वय. 6. ms. स्वराजा. 7. ms. -व्यं. 8. ms. -भाषामदन्तः. 9. ms. राजापदं. 10. Ś षष्ठी नयेत् पदं नाम तदा कोष्ठबलं च तत् ।

निषेधमाह यमः—

अपात्रस्थां हि वटिकां प्रवेशे नैव घातयेत्।
पात्रस्था चेद् भवेद्राजन् [1]यत्नात्तां घातयेत् सुधीः ॥ ६० ॥
घाते सति विपक्षस्य सा प्रवेशं न चार्हति।
[... ... ... ... ...]
[2]विजानीयाद्गतायु[*5b*]ष्कमिति [3]गौतमभाषितम् ॥ ६१ ॥

इति वचनात् अपात्रस्था वटिका प्रवेशं नार्हति। पात्रस्था चेत्तदाघाते [ग]तायुष्कं[4] कुर्यात्।

प्रतिप्रसवमाह गौतमः—

पदातेः षट्पदे विद्धे राज्ञा वा हस्तिना तथा।
षट्पदं न भवेत्तस्य चावश्यं शृणु पार्थिव ॥ ६२ ॥

इति।

यमः—

सप्तमे कोष्ठके या स्याद् वटिका दशकेन वै।
तदाऽन्योन्यश्च हन्तव्यं सुखाय दुर्बलं बलम्[5] ॥ ६३ ॥

इति [6]वचनात् दशकेन दानेन या वटिका सप्तमे कोष्ठे भवति सा प्रवेशं नार्हतीत्यर्थः। प्रवेशे[7]ऽन्यहननं नास्तीति भावः।

त्रिवटीकस्य कौन्तेय पुरुषस्य कदाचन।
षट्पदं न भवत्येव इति गौतमभाषितम् ॥ ६४ ॥

प्रतिप्रसवमाह ऋष्यशृङ्गः—

नौकैका वटिका यस्य विद्यते खेलने यदि।

---

1. ms. यत्नोत्तां. 2. ms. विजानीयाद्गतामूक-. 3. ms. गौत्रम-. 4. ms. तामूकं. 5. ms. बलं. 6. ms. वचनोक्ते. 7. ms. हन्य हननं.

गाढावटीति विख्याता पदं तस्य न दुष्यति ।

[1][ गाढाघात्यं पदं राजपदं कोणपदश्च तत् ] ॥ ६५ ॥

'पदं राजपदं कोणपदश्च' एतेन राजकोष्ठस्था कोणस्था च वटिका प्रवेशमर्हतीत्यर्थः ।

यदि तस्य [2]भवेद्राजंश्चतूराजी च षट्पदम् ।

[3]चतूराजी भवत्येव न तु षष्ठपदं नृप ॥६६॥

इति । तस्य [4]षट्पदस्येत्यर्थः । चतुरङ्गपद्धतावप्येवम् ।

[5][ प्रार्थिते पञ्चमे राज्ञि मृतवत्याश्च षट्पदे ।

अशौचं स्यात्तदा राजंश्चलित्वा चालितं पदम् ] ॥ ६७ ॥

हस्ते रङ्गे बलं नास्ति काककाष्ठं तदा भवेत् ।

वदन्ति राक्षसाः सर्वे तस्य न स्तो जयाजयौ ॥ ६८ ॥

इति व्यासः । काककाष्ठे सति तस्य स्नानं विधीयते ।

अगस्त्यः—

काककाष्ठे पुनर्जाते स्नानं कुर्यान्नराधिप ॥ ६९ ॥

वंशाभावाद् [6]गर्हणीयः । अतः स्नानं विधीयते । त्रिः स्नानं विधेयम् । [7]तत्तु पापहृत् । भारतेऽस्य वचनं व्यासेनोदितम् ।

पार्थ [8]सिंहासनकाले काककाष्ठं यदा भवेत् ।

सिंहासनं भवत्येव काककाष्ठं न भण्यते ॥ ७० ॥

इत्यगस्त्यवचनात् । [*6a*]प्रवेशकाले चेत् काककाष्ठं भवति तदा

---

1. Ś adds this and reads -घात्यापदं. 2. Ś. भवेत् पार्थ, ms. राजन् चतू०. 3. Ś तदापि च चतूराजी भवत्येव न संशयः. 4. ms. षट्पदेरित्यर्थः. 5. This couplet occurs in Ś. 6. ms. गर्हणीयाऽतः. 7. ms. स तु. 8. ms. सिंहासने.

सिंहासनं कर्त्तव्यं न तु काककाष्ठं कर्त्तव्यम्[1]। चतुरङ्गपद्धतावप्येवम्।

उपविष्टन्तु[2] यत् स्थानं तस्योपरि चतुष्टये।
नौकाचतुष्टयं[3] यत्र क्रियते यस्य नौकया।
नौकाचतुष्टयं तस्य बृहन्नौकेति भण्यते ॥ ७१ ॥

इति व्यासवचनात् यस्य नौकया बृहन्नौका क्रियते तस्य [3a]नौकाचतुष्टयमेव। वस्तुतस्तु एवं न हि।

नोकाचतुष्टयं तत्र नेतुं[4] येन हि शक्यते।
हठादिति विजानीयात्तस्य नौका इति श्रुतिः ॥ ७० ॥

इति श्रुतेर्वचनाद्धठाद् येन नेतुं शक्यते तस्य नौका। एतत् पुनरनित्यं कर्त्तुरिच्छया[5]।

नौकात्रयं यदा हस्ते अन्यन्नीतश्च शत्रुणा।
नौकाकृष्टमिदं प्रोक्तं हठान्नौकान्ततो नयेत् ॥ ७१ ॥

यमस्तु—

नौकाद्वयं यदा हस्ते रङ्गे तिष्ठति चेन्निजम्[6]।
परेणापकृताश्चैकां नकडीश्चानयेद्वदेत् (?) ॥ ७२ ॥

अत्रापि मीनमारो दृश्यते। चतुरङ्गपद्धतावप्येवम्।*

पितामहः—

बलेनैकेन [7]हि राजन् घातद्वन्द्वं प्रवर्त्तते।
[8]आत्मनश्च बलस्यैवाघलघातः प्रकीर्त्तितः ॥ ७३ ॥

1. ms. कर्त्तव्यं. 2. Ś. ०ष्टश्च. 3. ms. -त[×]यं. 3a., ms. चतुष्टयं नौकेव. 4. ms. नोतुं. 5. ms. -रिछया. 6. ms. चेन्निजा. 7. ms. महाराज. 8. ms. आत्मनश्च बलश्चैवा.

यमस्तु—

एकेन द्वौ बलौ विद्धावघलघातः प्रकीर्त्तितः ।
चिन्तयित्वा च राजेन्दो खेलयेत्तत्र वै बलम् ॥ ७४ ॥

[............] इत्यगस्त्यवचनं सुधीभिर्भाव्यम्[1] इति वचनेन विपक्षस्य एकबलेन एककाले आत्मनो बलयोर्घातद्वये सति अघलघातः कथ्यते। अत्र यत् खेलनं [2]तत् सुधीभिर्भाव्यम्। मैथिला अप्येवम्।

मालिकायाम्—

प्रवेशं कर्त्तुमिच्छन्तं[3] राजानं छेदयेद्बुधः ।
प्रवेशे च कृते राज्ञा[4] वध्यो यत्नेन सर्वतः ॥ ७५ ॥

इति व्यासवचनात् सर्वतः सर्वबलैर्मित्रपक्ष[*6b*]स्य [5]बलान्यपि हन्तव्यानि। व्यवहारात् [6]प्रविष्टस्य राज्ञः मित्रबलं विपक्षेण चालयेत् ढालयेच्च।

व्यासः—

संप्रविष्टं च कौन्तेय मैत्रेयं यदरेर्बलम् ।
घातयेन्नैव तद्धर्मी चालयेत् स्वमिवाऽऽर्यधीः ।
घातयेद् यश्च दुर्बुद्धिरपेयम् उदकं ततः ॥ ७६ ॥

इति वचनात् शत्रुराजे[7] संप्रविष्टे सति [8]अरेर्मैत्रेयबलं नैव घातयेत्। विपक्षस्य बलं स्वमिव चालयेत्।* तद्बलश्चेदा-घाताय तदा [9]तत् त्याज्यम्। एवं चतूराजी-कालेषु ज्ञेयम्। सिंहासन[10]-चतूराजीभङ्गेऽशौचम्[11]।

---

1. ms. -भाव्यं. 2. ms. तद्धधीभि-. 3. ms. -मिछन्तं. 4. ms. राज्ञि. 5. ms. बलादपि हन्तव्यः. 6. पविष्टस्य. 7. ms. -राजा. 8. ms. अरेस्यैत्रयबलं. 9. ms. स त्याज्यः. 10. ms. -सनं. 11. ms. शौच.

महामनुः—

[1]प्रोत्थिते पञ्चमे राज्ञि मृते [2]वट्यान्तु षट्पदे ।
अशौचं स्यात्तदा [3]राजञ् चलित्वा चालितं बलम् ।
द्विरावृत्ते[4] गतौ तस्माद्धन्यात् परबलं जयी ॥ ७७ ॥

'प्रोत्थिते[5]' राज्ञि प्रविष्टे राज्ञीत्यर्थः ।

सिंहासनं प्रवेशश्च पञ्चमं भण्यते बुधैः ।
चतूराजी स्वप[द]स्था[6] चतूराजी तु कथ्यते ॥ ७८ ॥

इति याज्ञवल्क्यवचनाद् ज्ञेयम् ।

प्रवेशे च मृते राज्ञि शृणु राजेन्द्र यत् फलम् ।
तावद् भवति चाशौचं यावन्नैव बलं चलेत् ॥ ७९ ॥

प्रवेशकाले यदि प्रवेशभङ्गो भवति तदाऽशौचं स्यात्, चलिते बले सति अशौचान्तो भवति ।

यामले—

प्रवेशमिच्छुना[7] राज्ञा[8] प्रवेशः कार्य एव च ।
[9]पलायेन्नैव राजेन्द्र इति गर्गस्य भाषितम् ॥ ८० ॥

महाभारते च [10]गद्यम्—प्रवेशमिच्छुना[7] राज्ञा[8] प्रवेशः कार्य एव, न तु पलायेतेति[11] । पलायिते प्रवेशभङ्गजः[12] दोषः । मै[थि]लास्तु पलायन्ते ।* तत्तेषां स्खलनम् । चतुरङ्गपद्धतावप्येवम् ।*

सिंहासनं चतूराजी [13]यदाऽवस्थानतो भवेत् ।
[14]सर्वसैन्यैर्गजैर्वाऽपि रक्षितव्यो महीपतिः ॥ ८१ ॥

---

1. Ś. प्रार्थिते. 2. Ś. वट्याश्च. 3. ms. हस्ति for राजञ् (Ś). 4. Ś. -वृत्त्या. 5. ms. पञ्चमे. 6. ms. -स्थं चतुराधीस्तु. 7. ms. -मिछु. 8. ms. राजा. 9. ms. पालयन्नैव. 10. ms. गद्य. 11. ms. पलायेत् only. 12. ms. -ङ्गजं दोषं. 13. ms. यदव-. 14. ms. -सैन्यगजै-.

वाऽवधारणे। इति व्यासवचनात् सिंहासनकाले एवञ्चतूराजीकाले च [1]'सर्वसैन्यैर्गजैरपि नृपो रक्षणीयः। चतुरङ्गपद्धतौ तु 'रक्षित[7a]व्यो महीपती'। [2]तन्मिश्रस्य स्खलनमिति गुरुचरणाः। वस्तुतस्तु तन्नयेन [येन] चतूराजी क्रियते तस्य नृपरक्षणं कर्त्तव्यम्। अन्यथा स्वयश्चेत् [स्व]स्थाने सति घाते राजानं चालयेत् स पापग्रस्तो भवति।

पितामहमनुः—

[3]सिंहासने चतूराजौ काककाष्ठे नृपोत्तम।
घाते बलं न हन्तव्यं राज्ञः खलु मयेरितम्॥ ८२॥

अर्थात्तेन राज्ञा न हन्तव्यमित्यर्थः। यद् वा [4]'सर्वसैन्यैर्गजैर्वाऽपि रक्षितव्यो महीपतिः' [तत्] तेषां मते गजैर्गजलयकरणैर्विपक्षस्य राजा रक्षणीयः। [न] तन्नयतः, येन राज्ञा चतूराजी क्रियते तस्य भङ्गे महद्दोषत्वात्।

भारते—

घाते च शृणु राजेन्द्रो राजानश्चालयेन्न च।
विदध्याद् यश्च पापात्मा तस्य का [नु] विनिर्दिशेत्।
सत्यं सत्यं पुनः सत्यमिदं [5]व्याससमीरणम्॥ ८३॥

सिंहासनभङ्गे एवं चतूराजीभङ्गे [6]महद्दोषत्वात्। चतुरङ्गपद्धतावप्येवम्।

तथा च व्यासः—

बलेनैकेन कौन्तेय राज्ञश्च करिणस्तथा।
छिन्ने तु बिन्धने [7]धीमाञ् छेदयेद् गजबिन्धनम्॥ ८४॥

---

1. ms. -सैन्यगजै-. 2. ms. तत्. 3. ms. -सिंहासनश्चतुराजी. 4. ms. -सैन्यगजै-. 5. ms. व्यालस-. 6. ms. महद्धोष-. 7. ms. धीमान.

[1]राज्ञः करिणश्च बिन्धने यदा एकबलेन छेत्तुं शक्यते तदा गजबिन्धनं छेदयेत्। महाबलत्वात्। मैथिला एवं कुर्वन्ति।* तदव्यवस्था इति गुरुचरणाः। छिन्ने सतीत्यवधेयम्।

[1a]स्थानाभावो यदा पार्थ हस्तिनं हस्तिसम्मुखम्।
करिष्यति तदा राजन्निति [2]गौतमभाषितम्॥ ८५॥

अपिच—

प्रवेशे यदि राज्ञश्च करिणोर्बिन्धनं भवेत्।
तदा धेढिं विदध्यात्तु गौतमेन हि भाषितम्॥ ८६॥

प्रवेशकाले चेत् प्रवेशकर्तृ राज्ञः गजयोर्बिन्धनं स्यात्तदा [3]धेढिः देया प्रवेशभङ्गार्थम् इति [2]गौतमजल्पनम्।* एतन्मतं व्यासादीनां न, एवम् अस्माकमपि मैथिलानामपि मिश्रस्य चतुरङ्ग-पद्धतावपि नैव, अत एव तस्य मुनेर्महत्त्वम्। एवं[*7b*]चतूराजी-कालेऽपि इति गुरुचरणाः। वस्तुतस्तु प्रमाणद्वयं वर्त्तते। [4]अत्र खेलने [ये]षां यद्रोचते तत् कार्यम्।

[5]जावालोऽपि—

एकदैव हि कौन्तेय गजस्याभिमुखं गजम्।
न कार्यन्तु चतूराजी (?) प्रवेशे कारयेत् सुधीः॥ ८७॥

प्रवेशे चतूराजीभङ्गार्थम्।

घातयेत् तत्र यत्रैव बलं प्राप्नोति पाण्डव[6]।
संप्राप्ते तु गजद्वन्द्वे हन्तव्यो वामतो गजः॥ ८८॥

इति [5]जावालवचनात् यत्र बलं प्राप्नोति तत्रैव तु [ह]न्तव्यः।

---

1. ms. puts this sentence before तथा च व्यासः above (83.3). 1a. ms. -भावे. 2. ms. गोतम-. 3. ms. धेप्ति. 4. अत्र यत् खेलनं तत्तेषां यद्रोचते. 5. ms. यावा-. 6. ms. मानव.

किन्तु गजद्वये प्राप्ते वामतो गज एव हन्तव्यः। एवं चतुरङ्ग-पद्धतावपि ।*

[1]राजैको घातितः शत्रोरात्मनो राज्ञि संस्थिते।
हत्वा मित्रस्य राजानं वकडाश्चाऽऽनयेत् सुधीः ॥ ८९ ॥

इति [2]जावालवचनाद् बोध्यम्।

यमः—

[1]राजैको घातितः शत्रोर्मैत्रेयो[3] वाऽपि [4]शात्रवः।
नृपाकृष्टाय राजानं घाते सति न घातयेत् ॥ ९० ॥

इति।* व्यासेन कथितम् 'आत्मनो राज्ञि संस्थिते' इति वचनाच् शत्रो [1]राजैको घातितः आत्मनो राज्ञि संस्थिते सति नृपाकृष्टाय मित्रस्य राजानम् अथवा विपक्षस्य राजानं घाते सति न घातयेत्। मिश्रोऽप्येवम्।

याज्ञवल्क्यः—

नृपाकृष्टस्य भङ्गाय तूठा चैव यदैकदा।
कार्यं तु [5]भञ्जनं राजन् नृपाकृष्टस्य धीमतः।
अत्र काले उठा कार्या न तु राजन् युधिष्ठिर ॥ ९१ ॥

इति वचनाद् यदा एकदा नृपाकृष्टस्य [5]भञ्जने एव उठा भवति तदा नृपाकृष्टस्य भञ्जनं कार्यम्। चतुरङ्गपद्धतौ तु नीयते यस्मात् तत्(?)। मिश्रोऽप्येवम्।

बिन्धने सति ज्येष्ठानां बलानां प्राप्यते बलम्।
घातेऽपि बिन्धनं छेद्यं बलं नैव तु घातयेत् ॥ ९२ ॥

इति व्यासवचनात् ज्येष्ठानामित्युपलक्षणम्।* राज्ञः गजस्य वा बिन्धनं छेद्यं न तु बलं घातयेत्। एतत्तु प्रवेशे चतूराजीपरम्।

---

1. ms. राजैकं घातितं. 2. ms. यावालवचनात् बोद्धव्यं. 3. ms. -मैत्रेयं. 4. ms. शात्रवं. 5. ms. भङ्ग- for भञ्ज.

तावत्तु खेलयेद्राजन्नुठान्तं नैव ढालयेत् ।
संप्राप्ते [1]बहु[8a]ले चैव उठां कुर्यान्न ढालयेत् ॥ ६३ ॥

इति वच(न)ात् उठाम् एव कुर्यान् न तु खेलनम् । एतत्तु प्रवेशे चतूराजीकाले इतरत्र[ऽपि] ज्ञेयम् ।* [1a][अन्य]त्र त्वनियमः । उठाशब्दो ग्राम्यभाषा ।* चतुरङ्गपद्धतावप्येवम् ।

[2]जावालः—

उठैकेन हि कर्त्तव्ये द्वितीयं दानमारभेत् ।
दत्त्वा त्वेकं हि चान्यत्र हन्यादेकेन तद्बलम् ॥ ६४ ॥
उठाश्चेत् कारयित्वा तु [2a]चान्यद्दानन्तु खेलयेत् ।
तदा थोकं विजानीयादिति ग्रन्थविदो विदुः ॥ ६५ ॥

'जगुरि'ति च [पाठः] ।

थोके च पतिते राजन् बलं तस्मै प्रदापयेत् ।
तथैवोठेति नोक्ते च ज्ञेयं राजन् युधिष्ठिर[3] ॥ ६६ ॥

इति व्यासवचनात् एकदानस्य घाते दानद्वयपतिते एकमन्यत्र दत्त्वा [4]एकेनोठां कुर्यात् । आदौ उठां कृत्वा अन्यदानञ्च खेलयेत् ।* तदा थोकं भवति ।* तद्बलं तस्मै देयम् ।

यमस्तु, उठां कृत्वा उठा इति नोक्ते सति थोकं भवति च । मिश्रोऽप्येवम् ।

उठाया हि बलद्वन्द्वं दानद्वन्द्वे च चेत् पतेत् ।
हन्तव्यं तत् प्रयत्नेन उठा शेषेण सिध्यति ।
पूर्वेण सद्बलञ्छेत्तुं सूतके सूतकं तथा ॥ ६७ ॥

इति वच[ना]द् [5]बोध्यम् । यदाऽशौचेऽशौचं[6] भवति [7]पूर्वा-

---

1. ms. बहुलो. 1a. ms. तत्र for अन्यत्र. 2. ms यावालः. 2a. ms -चान्यद्मान-. 3. ms. ष्ठिरः. 4. ms. एकेठेनोठां. 5. ms. बोद्धव्य'. 6. ms. -शोचं. 7. ms. -शौचश्चेद्-.

शौचश्चेद् गुरु तदा पूर्वाशौचेन शुध्यति। तद्वच्च चेत् पूर्वे सद्बलं तिष्ठति तदा पूर्वबलेनोठा कार्या, किन्तु मालिकायां [1]व्यासस्य गद्यम्—संप्रविष्टे राज्ञि प्रवेशस्य कोष्ठे उठाबलं तिष्ठति [चेत्] तदा तद्बलं हन्तव्यं नैव।* अन्यच्चेत् वर्त्तते तदा हन्तव्यम्। 'अन्यद्बलम्' उठाया इत्यर्थः।

यमः—

सिंहासनस्य कोष्ठे तु उठाया [1a]अस्ति चेद्बलम्।
हनने तस्य राजेन्द्र प्रवेशं नार्हति ध्रुवम्॥ ९८॥

इति वचनात् तद्बलं नैव हन्तव्यम्।

अन्यच्चेद्वर्त्तते राजन् हन्तव्यं तद्बलं ततः॥ ९९॥

इात बोद्धव्यम्।

दशदण्डात् परं राजन् क्रीडां कुर्याद्विचक्षणः।
[2]देवाख्यदाननाम्ना वा पाशां[*8b*] धृत्वा च ढालयेत्॥१००॥

तेन जय रघुनाथ जय बलराम इति वा दशविंत्ति(?) वा पञ्च चौपञ्च विद्वद्ढह(?) चाविदोहा(?) चाविद्ध (?) तिया पँाचतिसाता इत्यादि। [ वक्तव्यम् ]।* एतत्तु ग्राम्यभाषा।

क्रीडाभङ्गे तु राजेन्दो कुर्याद्बलसमुच्चयम्।
पातयित्वात्मनः सैन्यमवशिष्टं [3]जयस्ततः॥ १०१॥

इति वचनाद् आत्मनो बलानि पातयित्वा यदवशिष्टं तद् गणयेत्तज्जयः[4]। पँाचा चौका[तिया] दुया एवं क्रमेण पाशां छकेत्। बालबोधार्थं मया एतादृक् स्पष्टीकृतम्। अत एव हे धीरा मे स्मितं मा कार्यम्। अस्यां क्रीडायाम् [5]अन्याऽव्यवस्था

1. ms. व्यासः. 1a. ms. अति-. 2. ms. देवाख्य'. 3. ms. जय' ततः. 4. ms. -जय'. 5. ms. अन्यद्व्य०.

चेज्जायते तदा सुधीभिः [1]संभाव्य सुव्यवस्था देया। मुनिप्रणीतौ विधिनिषेधौ संदूष्याऽ[न्या] सुधीभिर्व्यवस्था कार्या। चतुरङ्ग-पद्धतावप्येवम्।

व्यासः—

यस्त्विमां खेलयेन्नित्यं क्रीडामेवं क्रमेण तु।
न तस्य जायते शत्रोर्भयं दुःखश्च भूमिप ॥ १०२ ॥
ये नराश्च प्रशंसन्ते क्रीडाश्चेमां युधिष्ठिर।
खेलयित्वा च लभते वाजिमेधायुतं फलम् ॥ १०३ ॥
इन्द्रेण क्रीडितं पूर्वं ततः प्राप्तं महद् यशः।
ततः कौन्तेय तां क्रीडां खेलयेत् [2]सुमनाः सुधीः ॥ १०४ ॥
क्रीडामिमां व्यासमुखादुदीरितां योऽप्यन्यथा मूढजनः करोति।
[3]नूनं स रोगं धनधान्यशौन्यं प्राप्नोति कृच्छ्रं वधबन्धनश्च ॥१०५

इति वचनाद् यो जन इमां क्रीडामन्यथा करोति, न मन्यते, तस्य एतानि भवन्त्येव।

अस्याः प्रसादाद्राजेन्द्र दधीचिः प्राप्तवान् जयम्।
खेलयित्वा त्विमां लक्ष्मीं पुत्रपौत्रीणतां नय ॥ १०६ ॥

अस्याः क्रीडाया इत्यर्थः।

यमस्तु—

कुर्वन्ति च ये मनुजा इमां क्रीडां युधिष्ठिर।
गृहे तिष्ठति यस्यैषा तस्य श्रीः सर्वतोमुखी ॥ १०७ ॥

इति महोमहोपाध्याय-शूलपाणि-विरचिता चतुरङ्गदीपिका समाप्ता।
चन्द्रखाश्वाश्विनीमाने शाके कोऽपि हरिं नमन्।
विप्रोऽलिखदिदं पुस्तं समये कर्कटार्कके ॥

1. ms. सम्भाव्य. 2. ms. सुमनः. 3. ms. न्यूनं.

ŚŪLAPĀṆI'S

# CATURAṄGADĪPIKĀ

Om. Salutation to Gaṇeśa.

> 1. Bowing to Hari's feet which are like lotuses surrounded by humming bees Śūlapāṇi composes this manual (*dīpikā*) of Caturaṅga (the game of four-handed dice-chess).

By the tradition carried through Janamejaya, Sūta, Pakṣin (or 'the Bird'), Nārada and Yudhiṣṭhira, the game of Caturaṅga has come into vogue in this world. Janamejaya enquired about this of Sūta and the latter communicated to him what he heard from Vyāsa. In the days of yore the son of an ascetic (*muni*) being under a curse was born as a bird (*pakṣin*). This bird or Pakṣin described the game to Indra; and Nārada saw the latter playing the game and described it to Yudhiṣṭhira. Afterwards Yudhiṣṭhira questioned Vyāsa about the game. Now listen to what the latter sage (Vyāsa) said.

---

1. The Caturaṅga through Middle Persian *Catrang* Modern Persian *Śatranj*, is the ancestor of the modern game of chess. For details see the Introduction.

*Dipikā* (lit. a small lamp) means a 'guide', 'manual', or 'Leitfaden'.

For details of Śūlapāṇi's life and time see the Introduction. The mythical story given here about the origin of the game occurs, as far as we know, in none of the extant Purāṇas and Epics. The game of Caturaṅga as it is to be played for stake can be called a *dyūta* (see 43, 47 and 50 etc.). And it has been so styled in Vaṃśamaṇi's Caturaṅga-taraṅgiṇī (see H. P. Shastri, A Catalogue of the Palmleaf & Selected Paper MSS. belonging to the Darbar Library, Nepal, Cal. 1905. Vol. I. p. 168).

Janamejaya said :

2. "O gracious sage, tell me in detail about the deed by which Yudhisthira attained prosperity."

---

The fact that Yudhisthira of the Mahābhārata played *dyūta* with his enemies the Kurus seems to point to the genuineness of the story which connects this epic hero with the early history of the game. The question of the relation between the Caturaṅga and the *akṣa-dyūta* has been discussed in the Introduction. The CT. too connects Yudhisthira as well as Indra, Śiva, Viṣṇu and Vyāsa (or Veda-Vyāsa) with the Caturaṅga in the following passage :

यत्र रज्यन्ति राजानो धर्मजप्रमुखाः स्म वै ।
तथासुमनसामीशो माधवोमाधवादयः ॥
इत्यैतिह्यस्य प्रस्तावे व्यासेनावेदितं पुरा ।
शङ्करस्य पुरा दूतं ससर्ज सुमनोहरम् ॥

"In which (game) kings like Yudhisthira (lit. born of Dharma) took delight and likewise did Indra (lit. king of the gods), Viṣṇu (Mādhava) and Śiva (lit. the lord of Umā). All this has been reported by Vyāsa in his *Itihāsa* (i.e., the Mahābhārata)". The CT. further writes as follows :

धर्मपुत्राय धौम्येन सौम्येन परमर्षिणा ।
वनवासे पुरा प्रोक्ता क्रीडा या चतुरङ्गकी ॥

"In the days of yore, the game which is named Caturaṅgakī, has been described by the calm sage Dhaumya to Yudhisthira during his exile". The story of Śiva's connection with the origin of the Caturaṅga has been drawn from the Skanda Purāṇa. It is said there that on the first day of the bright half (*śukla-pakṣa*) of the month of Kārtika Maheśvara (=Śiva) played the game (*dyūta*) and since then this game was current in this world (see S. Vidyalankar, Jīvanī-koṣa, p. 1695). Names of Indra, Viṣṇu, Vyāsa in connexion with the game do not seem to occur in any of the extant Purāṇas or Epics.

2. One knowing the story of the Mahābhārata will not perhaps agree with our author who ascribes Yudhisthira's ultimate prosperity to *dyūta*. But gambling with all its faults may be said to develop in the players a power of standing the freaks of fortune with a calm spirit—a virtue which should be considered very valuable for a man bent on adventure for the sake of prosperity.

Sūta said :—

3. "O the best among men, once a bird (*pakṣin*) came to Indra's court in heaven and accosted the lord of gods thus :

4. 'O magnanimous Indra, the best (lit. tiger) among the gods, play the game that I am going to describe' ; (for) listen, O the best among men, it gives everything that one may desire.

5. O the best among men, Nārada the celestial sage listened to the words of the bird very carefully and repeated them to Yudhiṣṭhira.

6. Glad to hear this Yudhiṣṭhira at once invited the sages like Vyāsa and others to play the game with him. (And after he had come) the king said to Vyāsa the great sage (as follows) :"

Yudhiṣṭhira said :

7. "O the sage, describe to me the game which is played on a board with (groups of) eight squares and tell me in details how the Catūrāji occurs."

---

4. *Sarva-kāma-phala-pradā* 'fulfilling all sorts of desires.' This is only a figurative way of saying that the game is very fascinating.

7. *Aṣṭa-koṣṭhā* does not directly mean a square board with 64 small squares. The CT. which is more explicit on this point describes the game board as follows :

तिर्यगूर्ध्वं क्रमेण वै नवरेखान् समाविशेत् ।
एवं त्वन्त:स्वस्तिकटं क्रीडाचक्रं प्रजायते ॥

"(Two sets of) nine (straight) lines are to be drawn, (one) vertically and (the other) horizontally. And thus will come into being a game board within which will be many *svastikas* (crosses)". See *Diagram* 1.

It is due to the number of squares being multiples of eight (*aṣṭa*) that the game board was called an *aṣṭāpada* as in the R ā m ā y a ṇ a etc.

Vyāsa said :

8. "Drawing eight squares (on each side), place the pieces (*balas*) from the right. Put the red pieces in the east, the green ones in the south, yellow ones in the west and the black ones in the north.

9. And put the elephant on the left of the king and then the horse and then the boat, and while fighting, O the son of Kunti, put four pawns in front (of them all)."

(This is according to Vyāsa). And Yama also (says) :

10. "The boat should be placed in the

*Catūrāji*, 'an aggregate of four kings'. This is an example of the Dvigu (Numerical Determinative) compound of the Skt. grammarians. The *u* of *catur* has been lengthened according to P ā ṇ i n i, 8. 3. 14 and 6. 3. 11. For the final ī see V ā r t t i k a on Pāṇini, 2. 4. 14.

8-9. East, South, West and North mentioned in the text are probably to be taken in their literal sense. For the Caturaṅga being a ritual game the tradition seems to have fixed which positions different players were to occupy. We do not know whether the four colours, red, green, yellow and black have any symbolic meaning in connexion with different directions. The CT. is silent on this point. It seems that the M i t h i l ā s c h o o l observed no rule in this matter.

The regular four members of the ancient Indian army were elephant (*hastin*), horse (*aśva*), chariot (*ratha*) and foot soldier (*padāti*). In this game the boat (*naukā*) has been taken in the place of the chariot. We do not know whether this game was invented in a locality like Bengal where boats were extensively used in military operations as early as the Gupta times. K ā l i d ā s a' s description of the inhabitants of Bengal as *nausādhanodyata* 'ready with their nautical armament' (Raghu. 4. 36) must have been based on facts. But we should not dogmatize on the point. There is likelihood of the Caturaṅga being invented in other parts of Northern India as well, and the boat might have taken place of the chariot after the game was introduced in Bengal. For details about the place of origin of the game see the Introduction.

corner, the horse in the second place, the elephant in the third and the king in the fourth ; and pawns are to be placed in front of (these four ."

The pieces should be placed (in the game board) according to this rule.

11. "The king and the pawn move by a throw of five, the elephant by (that of) four, the horse by (that of) three and the boat by (that of) two."

The pieces should be moved according to the above rule. The passage is also read with *trikeṇa* for *tṛtīye*.

10. About the position of pieces in the game board Al-Beruni who has written about a kind of Caturaṅga, is silent. It seems that they were similar to that given in the present work. The CT. also prescribes the similar positions for the pieces. Its description given there in a different language is as follows :

तुर्यकोष्ठं समारभ्य वामकोणगृहावधि ।
आदौ राजा ततो दन्ती वाजी नौका ततः परम् ।
क्रमात् क्रमान्निधातव्यस्तेषामग्रे पदातयः ॥

"From (after) the fourth square from the left corner, pieces are to be placed in the following order : king, elephant, horse, and boat, and in front of them all are to be placed foot soldiers." See *Diagram* 1.

From the above description we can have a clearer idea of the subject and can learn that parties arrange their pieces to the left half of the two rows of squares immediately in their front. On this point the CD. is silent. Murray (p. 27) mentions that there are descriptions of Indian chess in which elephant and boat have changed places ; we do not know where such a case occurs. Peahaps it does not occur in the game of Caturaṅga.

11. The CD. is silent on another point and a very important one. We do not know from it how many dice are required for the game. But it mentions the marks that dice have on them as follows : पाँचा चौका [ तिया ] दुया एवं क्रमेण पाशां क्कैत्. "The dice are to be marked with five, four, [three] and two." This passage belongs in all likelihood to a later writer (see the Introduction). The CT. gives on this point a definite information as follows ;

The *Caturaṅga-paddhati* too (says) :

12. "O king, the pawn moves by a throw of five and the king too moves similarly, and by (a throw of) four the elephant moves and by (a throw of) three the horse and by (a throw of) two the boat."

---

पाशकौ द्वौ विधातव्यौ मायुचिह्नसमन्वितौ
द्विकं त्रिकं चतुष्कं च पञ्चकञ्चेतिचिह्नकम् ।
दशद(धा)यंभिवर्तते चतुर्णां योजने मिथः ॥
द्विद्विकं द्वित्रिकं चैव द्विचतुष्कं द्विपञ्चकम् ।
त्रित्रिकं त्रिचतुष्कञ्च त्रिपञ्चकमुदाहृतम् ॥
चतुश्चतुष्कं चतुःपञ्चकं पञ्चपञ्चकम्(?) ।

"Two dice should be made and they should contain the marks of the sun. On one side of them should be a pair of them and on another three and on the third side four and on the fourth five. From a combination of these four there will arise ten sets. 2+2, 2+3, 2+4, 2+5 ; 3+3, 3+4, 3+5 ; 4+4, 4+5 ; 5+5".

Al-Beruni too mentions two dice but the figures on the dice according to him are 1, 2, 3, 4, 5 and 6 (ed. Trübner 1910, p. 184). But of these six figures *one* and *six* are blank (i. e., do not count as such). In case the dice show *one* the player takes *one*, and instead of *six* he takes *four* (*ibid*). From this variation of the Al-Beruni's game we may assume that it was the Caturaṅga of a different school.

But whatever may be the significance of the variation in marks on the dice we have no means of exactly knowing how the possible throws were utilized by the players. But it seems that more than one piece and most probably two pieces could be moved after a particular throw, though the player might have the option of moving only one piece instead of two (see 25 and Notes on it).

The value of throws required for moving the different pieces are except on one point similar to that described by Al-Beruni (p. 184). For, according to him *one* instead of *five* moves the pawn or the king. But a little earlier he says "of the numbers of the dice five and six are blank (i. e., do not count as such)." In that case if the dice show *five* or *six* the player takes *one* instead of the *five* and *four* instead of the *six* (*ibid*). Thus it seems that the *five* of the CD. was equivalent to the *one* of Al-Beruni's game, but the CD. ignores *six* and so does CT. (see Notes on 11).

13. "The king can move to the next square (lit. passing one square) in every direction. The pawn moves (to the square) in its front but it can capture a piece placed in (squares next to) its front corners."

14. "The elephant, O king, can move at its will (to the next square) in four cardinal directions. [ The horse ( *turaṃgagama* ) moves sideways (to the next square) after crossing three squares ] ; the boat moves aslant two squares at a time, O Yudhiṣṭhira."

---

13. Al-Beruni describes in detail the movement of the elephant, which, however, is not clear (see the Introduction). The movements of other pieces were similar to that of similar pieces in the Caturaṅga (or four-handed dice-chess) described in our work (Murray, pp. 57-58). See *Diagrams* 3, 8, 9, 11 and 12.

14. According to Al Beruni "they move the elephant straight on and not to the other sides one square at a time like the pawn and to the four corners also one square at a time, like the queen (*firzan*). They say that there five squares......are the places occupied by the trunk and the four feet of the elephant" (p. 183). See *Diagram* 4. But according to the CD., the elephant can move to any of the four squares at its front back, right and left. In the interpretation of this passage occurring in the T i t h i t a t t v a Murray has been misled by his predecessors, for *diś* in *caturdikṣu* means only the four cardinal points of the compass. The movement of the elephant as given in the CD. exactly tallies with that given by the Arabian A l-A d l i (840 A. C.) in his writing of the Hindu Chess (Murray, p. 59). The CT., however, records a different movement for the elephant and it is as follows :

गृहमेकं··· ... ... ... ... ...

गजस्तु सर्वतो याति यावदिच्छं सवक्रकम् ॥

"The elephant moves, one square at a time, to any square (lit. anywhere) straight or cornerwise, (lit. aslant)." The movement of the elephant as available from R u d r a ṭ a ' s K ā v y ā l a ṃ k ā r a (v. 16) tallies with this. See *Diagram* 5. (For more about the passage in question, see the Introduction). Of the different movements of the elephant this seems to be the latest. (For details see the Introduction).

In the *Divyamālikā* Vyāsa (says as follows) :

> 15. (The different kinds of victories in the game of Caturaṅga :) Siṃhāsana, Catūrājī, Nṛpākṛṣṭa, Ṣaṭpada, Kākakāṣṭha, Bṛhannaukā and Naukākṛṣṭa.

The Siṃhāsana (means) 'entering (the domain of another king, enemy or enemy's ally)'. The Nṛpākṛṣṭa (means) 'assault' (Vakaḍā-vakaḍī), Ṣaṭpada (means) the pawn-promotion (lit. the entrance of the pawn), and the Naukākṛṣṭa (means) 'naval attack' (Nakaḍī).

Yama (says) :

> 16. "The pawn and the boat are to capture pieces when an attack and a counter-attack take place ; but the king, the elephant and the horse are to capture a piece after avoiding an attack."

Because these are superior pieces,

> 17. "One's own pieces are to be protected with utmost care. O king, the superior pieces of the enemy or of his ally should be captured even at the expense of one's minor pieces."

The rule for the movement of the horse does not occur in the ms. of the CD. But the fragment of the work occurring in the Tithitattva preserves it. We have taken it from there. Most probably this existed in the archetype of the ms. The movement of the horse as available here as well as in the CT. is similar to that available for the same piece in the modern chess. The passage is as follows :

ऋजुद्वं कोणकोष्ठाभ्यामभितोऽश्वगतिर्भवेत् (see *Diagram* 8).

15. The Siṃhāsana and the Catūrājī etc. are different results of the game. These will be defined and discussed later on (see 42 f.).

*Vakaḍā-vakaḍī* seems to be a dialectal word derived from *avakaṭā-vakaṭam* = *avakaṭa* + *avakaṭam* (cf. *parasparam*). As *avakaṭa* means 'opposite', 'contrary' ; the compound word appears to mean 'opposition or assault'. *Nakaḍī* (<**nokaḍī*) is possibly derived from *naukaṭakī*. It seems to mean 'naval attack' (*kaṭaka* = army).

